तथा,—

लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः।
दूतीसम्प्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥१६०॥(ग)

दूत्यश्च,—

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी।
बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ॥१६१॥(घ)

कारुः,—रजकीप्रभृतिः। शिल्पिनी—चित्रकारादिस्त्री, आदिशब्दात् ताम्बूलिक-गान्धिकस्त्रीप्रभृतयः। तत्र सखी यथा,—"श्वासान् मुञ्चति" इत्यादि।

---

(ग) लेख्येति।—लेख्यस्य—प्रणयव्यञ्जकपत्रस्य, प्रस्थापनैः,—प्रेषणैः, (लेख्यप्रस्थापने उदाहरणं यथा,—"विज्ञप्तिरेषा मम जीवबन्धो! तवैव नेयाः दिवसाः कियन्तः। सम्प्रत्ययोग्यस्थितिरेष देशः करा यदिन्दोरुपतापयन्ति॥" इति। एवमन्यान्युदाहरणानि प्रकृतग्रन्थादौ ज्ञेयानि) स्निग्धैः,—सस्नेहैः, वीक्षितैः,—अवलोकितैः, तथा मृदुभाषितैः,—कोमलमधुरवचनैः, अथवा लज्जया भयात् वा मृदुमन्दस्वरेण स्वाभिप्रायप्रकटनैः, तथा दूतीसम्प्रेषणैः नार्य्याः,—कामिन्याः, भावस्य—प्रेम्णः, अभिलाषस्य वा, अभिव्यक्तिः,—प्रकटनम्, इष्यते।

(घ) दूतीराह, दूत्य इति।—सखी—सहचरी, नटी—नर्त्तकी, दासी—किङ्करी, धात्रेयी—धात्रीकन्या, प्रतिवेशिनी—प्रतिवेशवासिनी, समीपस्थगृहवासिनीति यावत्, बाला—अनुद्भूतमदनविकारसम्पर्का कन्या, प्रव्रजिता—सन्न्यासिनी, उपलक्षणमिदं, तेन श्रमणा-क्षपणा-रक्तपट्टिकाऽऽदीनां तद्विशेषाणामपि ग्रहणम्; कारुः,—रजक-तक्षक-तन्तुवाय-नापित-चर्मकाराणां स्त्री; तथा च,—"तक्षा च तन्तुवायश्च नापितो रजकस्तथा। पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः॥" इति, शिल्पिनी आद्या यासां ताः शिल्पिन्याद्याः, शिल्पिनी च,—चित्रिणी रङ्गिणीत्येवमनेकविधा, (आद्यपदेन ताम्बूलिकादिस्त्रीणां ग्रहणम्) तथा स्वयं—नायिका, दूती स्यात्। [अत्र वात्स्यायनः यथा,—"विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका। प्रविशत्याशु विश्वासं दूतीकार्यञ्च विन्दति॥" एतं प्रविश्येति योजना]।

स्वयंदूती यथा मम,—

"पन्थिअ ! पिआसिओ विअ लच्छिअसि जासि ता किं अण्णत्तो ।
ण मणा वि वारओ इध अत्थि घरे घणरसं पिअंताणं ॥" (छ)

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

दूतीगुणानाह,—

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृति: ।**
**माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणा: ॥**
**एता अपि यथौचित्यादुत्तमाधममध्यमा:॥ १६२॥(च)**

एता:,—दूत्य: ।

---

(छ) स्वयंदूतीमुदाहरति, पन्थिअ इति ।—"पान्थ ! पिपासित इव लक्ष्यसे यासि तत् किमन्यत: ? । न मनागपि वारक इहास्ति गृहे घनरसं पिबताम् ॥" इति संस्कृतम् । हे पान्थ !—पथिक ! पिपासित:,—तृष्णार्त:, पक्षे—सम्भोगाभिलाषी इव, लक्ष्यसे—दृश्यसे, तत्—तदा, किं—कथम्, अन्यत: यासि ?—गच्छसि ? इह—अस्मिन्, गृहे—भवने, घनस्य—मेघस्य, रसं जलमित्यर्थ:, ("मेघपुष्पं घनरस:" इत्यमर: ) अन्यत्र—निविडरसं, सम्भोगसुखमित्यर्थ:, (अन्यार्थे पिबताम् इत्यस्य अनुभवता-मित्यर्थ:) यद्वा,—घनो दृढ़ीभूतोऽसौ रस आस्वादस्तं, घनो रसो यत्र इति वा, तमधर-मित्यर्थ:, पिबताम्—आस्वदतां, जनानां मनाक्—अल्पम्, एकवारमपि इत्यर्थ:, वारक:,—निषेद्धा, न अस्ति । गीति: छन्द: ; तल्लक्षणं यथा,—"गाथाद्वितीयतुर्यांशयोरष्टादश-मात्रको यदा भवत: । माला षष्टिशरीरा गीता सा गीतिरिह फणिपतिना ॥" इति ।

(च) कलेति ।—कला:,—नृत्यगीतादिका:, तत्र कौशलं—दक्षता, उत्साह:,—श्रेयान् यत्न:, भक्ति:,—प्रभौ अनुराग:, चित्तज्ञता—अभिप्रायज्ञानं, स्मृति:,—कर्तव्यार्थस्मरणं, माधुर्यं—मनोहरत्वं, नर्मविज्ञानं—परिहासाभिज्ञता, तथा वाग्मिता—वाक्पाटवमित्यर्थ:, एते तज्ञा:,—दूत्या:, गुणा:, किन्तु एता:,—दूत्य: अपि, यथौ-चित्यात्—यथायोग्यम्, उत्तमाधममध्यमा:, भवन्तीति शेष: ; एतै: समस्तैर्गुणैर्युक्ता दूती उत्तमा, पञ्चभि: चतुर्भि: वा गुणै: युक्ता मध्यमा, एकेन द्वाभ्यां वा युक्ता अधमा । एवं दूतादय: अपि अस्मदुक्तलक्षणा ज्ञातव्या: । [ अत्र दूतीकर्मोपाख्याने वात्स्यायनो यथा,—"विदेशं स्थापयेत् पत्यौ रमणीयानि वर्णयेत् । चित्रान् सुरतसम्भोगानन्यासामपि

अथ प्रतिनायकः,—

**धीरोद्धतः पापकारी व्यसनी प्रतिनायकः॥१६३॥(छ)**

यथा,—रामस्य रावणः।

अथोद्दीपनविभावाः,—

**उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥१६४॥ (ज)**

ते च,—

**आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ॥१६५॥(झ)**

चेष्टाद्या इति आद्यशब्दाद्रूपभूषणादयः। कालादीत्यादिशब्दात् चन्द्र-चन्दन-कोकिलालाप-भ्रमरझङ्कारादयः।

---

दर्शयेत् ॥ नायकस्यानुरागस्य पुनश्च रतिकौशलम्। प्रार्थनायाश्च विच्छित्तीर्भिरवेदन्यच्च वर्णयेत् ॥" इति।

(छ) प्रतिनायकमाह, धीरोद्धत इति।—धीरोद्धतः,—"मायापरः" इत्यादिना नायकलक्षणे प्रागुक्तः, पापकारी—पापाशयः, व्यसनं द्विविधं,—कामजं क्रोधजञ्च, तद्योगात् व्यसनी—मृगयाद्यष्टादशविधदोषाविष्टः, [अत एवोक्तं मनुना,—"कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाऽक्षो दिवा स्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" अक्षः,—द्यूतक्रीड़ा, तौर्य्यत्रिकं—नृत्यगीतवाद्यानि। पैशुन्यम्—अविज्ञातपरदोषाविष्करणम्। साहसं—साधोर्बन्धनादिना निग्रहः। द्रोहः,—जिघांसा। ईर्ष्या—परगुणासहिष्णुता। असूया—परगुणेषु दोषाविष्करणम्। अर्थदूषणम्—अर्थहानिकरं व्यसनम्। अन्यत् दशविधं विद्याव्यसनम् इति मनूक्तिसंक्षिप्ताशयः]
प्रतिनायकः,—प्रतियोगिनायकः।

(ज) उद्दीपनविभावमाह, उद्दीपनेति।—ये रसम् उद्दीपयन्ति—उद्रिक्तं कुर्वन्ति, परिपोषातिशयं नयन्ति इति यावत्, ते उद्दीपनविभावाः।

(झ) आलम्बनस्य—नायिकादेः। चेष्टा—नेत्रादिविक्षेपः, आद्यः येषां ते, तथा देशकालादयः, उद्दीपनविभावाः इति शेषः।

तत्र चन्द्रोदयो यथा मम,—

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥"(ञ)

यो यस्य रसस्य उद्दीपनविभावः, स तत्स्वरूपवर्णने वक्ष्यते ।

अथानुभावाः,—

**उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।**
**लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥१६१॥(ट)**

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैः आलम्बनोद्दीपनकारणैः रामादेः अन्तः उद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते, स काव्यनाट्ययोः पुनः अनुभावः ।

कः पुनः असौ ? इत्याह,—

**उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः ।**
**तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ॥१६२॥(ठ)**

---

(ञ) उदाहरति, करमिति ।—अयं सुधांशुः,—चन्द्रः, (नायकश्च) गलितं—च्युतं, तमसां—तिमिराणां, पटलमेव (तदेव) अंशुकं—वसनं यस्मात् तादृशे, उदयमहीधरः,—उदयाद्रिः एव, (तदेव) स्तनः,—पयोधरः,तस्य अग्रे—उपरीत्यर्थः, करं—किरणं, (हस्तञ्च) निवेश्य—अर्पयित्वा, (करेण पयोधराग्रं समालम्ब्येति हृदयम्) अमरेशदिशः,—पूर्वदिशः,(अङ्गनायाश्च) विकसितं—प्रफुल्लं कुमुदं—कैरवमेव, (तदेव) ईक्षणं—नयनं यत्र तादृशं, मुखम्—अग्रं, प्राग्भागसमारम्भस्थल इत्यर्थः, (वदनञ्च) विचुम्बति । अत्र चन्द्रकृतदिग्वधूमुखचुम्बनदर्शनमुद्दीपनम् । पुष्पिताग्रा वृत्तम्,—"अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ।

(ट) अनुभावमाह, उद्बुद्धमिति ।—स्वैः स्वैः,—निजैः निजैः, कारणैः, उद्बुद्धम्—उन्मिषितप्रायं, भावं बहिः प्रकाशयन्—अनुमापयन्, लोके—लोकव्यवहारे, यः कार्य्यरूपः, स काव्यनाट्ययोः अनुभावः ।

(ठ) अनुभावस्वरूपमाह, उक्ता इति ।—स्त्रीणाम् अङ्गजाः,—भावादयः त्रयः,

तद्रूपाः,—अनुभावस्वरूपाः । तत्र च यो यस्य रसस्य अनुभावः, स तत्स्वरूपवर्णने वक्ष्यते ।

तत्र सात्त्विकाः,—

विकाराःसत्त्वसम्भूताःसात्त्विकाःपरिकीर्त्तिताः॥१६८॥(ड)

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चन आन्तरो धर्मः । (ढ)

सत्त्वमात्रोद्भवत्वात् ते भिन्ना अप्यनुभावतः॥१६९॥(ण)

"गोवलीवर्दन्यायेन" इति शेषः । (त) के ते ? इत्याह,—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥ ॥१७०॥

---

स्वभावजाः,—लीलादयोऽष्टादश, अलङ्काराः उक्ताः । शोभाकान्त्यादीनां रत्यादि-प्रकाशकत्वाभावात् नानुभावरूपता । चेष्टाः,—नायकस्य नेत्रविक्षेपादयः । पराः,—अन्यं सात्त्विकविकारभिन्नाः इति सङ्केतः ।

(ड) सात्त्विकभावमाह, विकारा इति ।—सत्त्वं—रजस्तमोगुणवर्जितमनो-धर्मविशेषः, तस्मात् सम्भूताः,—समुत्पन्नाः, विकाराः,—चित्तस्य अन्यथात्वरूपा धर्मा इत्यर्थः, सात्त्विकाः परिकीर्त्तिताः,—उक्ताः ।

(ढ) सत्त्वं विवृणोति, सत्त्वं नामेति ।—स्वस्य आत्मनि—स्वरूपे एव विश्रामो यस्य सः स्वात्मविश्रामः,—रसादिः इत्यर्थः, तस्य प्रकाशकारी—अभिव्यञ्जक इत्यर्थः, कश्चन आन्तरः,—मानसः, धर्मः,—गुणः । प्रागुक्तमपि सत्त्वलक्षणं शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम् ।

(ण) सत्त्वेति ।—सत्त्वमात्रात्—केवलात् सत्त्वात्, उद्भवः येषां ते तत्त्वात् । अनुभावतः,—अनुभावात्, भिन्नाः,—पृथगपीत्यर्थः ।

(त) गोवलीवर्दन्यायेन—धेनुवलीवर्दयोर्गोत्वाविशेषेऽपि यथा कञ्चिद्धर्मविशेषमादाय भेदः, तथा स्तम्भादीनां निर्वेदादीनाञ्च भावरूपतयाऽविशेषेऽपि सात्त्विकत्वासात्त्विकत्वाभ्यां भेद इति भावः । एवञ्च,—"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इत्यादौ सात्त्विकभावस्य पृथगुपन्यासेन अनुभावातिरिक्तत्वमुक्तं [illegible]

तत्र,—

स्तम्भश्चेष्टाप्रतीघातो भयहर्षाऽऽमयादिभिः।
वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः॥
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया।
मदसम्मदपीड़ाद्यैर्वैस्वर्य्यं गद्गदं विदुः॥
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः॥१०१॥(च)

यथा मम,—

"तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जड़तामङ्गमखिलम्।

---

(च) स्तम्भादीन् व्याकरोति, स्तम्भ इति।—भयं—व्याघ्रादिदर्शनजन्यः अन्तःकम्पहेतुस्त्रासः, हर्षः,—पुत्रादिजन्मजनितोऽन्तःकरणोल्लासः, आमयः,—ज्वरादिव्याधिः, इत्यादिभिः कारणैः, चेष्टायाः प्रतीघातः,—निश्चलीभावः, स्तम्भः स्तब्धः। रतिः,—सुरतक्रिया, घर्मः,—निदाघः, श्रमः,—अध्ययनादिव्यापारजन्यः खेदः, आयास इत्यर्थः, इत्यादिभिः कारणैः, वपुषः,—शरीरात्, जलोद्गमः,—जलनिर्गमः, स्वेदः। हर्षः,—आनन्दः, अद्भुतम्—अदृष्टदर्शनाश्रुतश्रवणादिः, भयञ्च इत्यादिभ्यः कारणेभ्यः, रोम्णां विक्रिया—विकारः, रोमाञ्चः। मदः,—मत्तता, सम्मदः,—सम्यक् आनन्दः, पीड़ा—रोगः, तत्प्रभृतिभिः हेतुभिः, गद्गदम्—अस्पष्टभाषणं, वैस्वर्य्यं—स्वरभङ्गं, विदुः। रागः,—अनुरागः, द्वेषः,—वैरं, श्रमः,—परिश्रमः, इत्यादिभ्यः कारणेभ्यः, गात्रस्य कम्पः वेपथुः। विषादः,—विषण्णता, मदः,—मद्यपानजो विकारः, रोषः,—क्रोधः, तत्प्रभृतिभिः कारणैः, वर्णान्यत्वम्—अन्यवर्णप्राप्तिः, विवर्णता। क्रोधः,—कोपः, दुःखं—मानसः क्षोभः, प्रहर्षः,—प्रकृष्टानन्दः, एभ्यः जातं नेत्रोद्भवं वारि—जलम्, अश्रु—तन्नामधेयम्। सुखदुःखाभ्यां—सुखेन दुःखेन वा इत्यर्थः, चेष्टायाः,—शारीरव्यापारस्य, ज्ञानस्य च निराकृतिः,—अपगमः, प्रलयः।

कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्॥" (ट)

एवमन्यत्। (ध)

अथ व्यभिचारिणः,—

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।**
**स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः॥१७२॥(न)**

(ट) उदाहरति, तन्विति।—नायकाङ्गस्पर्शजनितस्य सात्त्विकभावस्य वर्णनमिदम्। अस्याः,—कान्तायाः इत्यर्थः, तनुस्पर्शात्—नायकशरीरस्पर्शात्, उपचारात् तज्जनितादानन्दात् हेतोः, नयने—नेत्रे, हन्त—आश्चर्ये, दरमुकुलिते—ईषन्मुकुलिते, कुड्मलाकारतां प्राप्ते इत्यर्थः, ("दराऽभये मनागर्थे" इति मेदिनी) अखिलं—समग्रम्, अङ्गम् उदञ्चन्तः,—उद्गच्छन्तः, रोमाञ्चाः यत्र तथाभूतं सत्, जडतां—जडत्वं, व्रजति—गच्छति, ["नयने उदञ्चत्" अत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११ पा०) इति द्विवचनस्य प्रगृह्यसंज्ञायां ततः "प्लुतप्रगृह्या अचि नित्यम्" (६।१।१२५ पा०) इति प्रकृतिभावे प्रगृह्यनिमित्तकोऽसन्धिः, स च असकृत्प्रयोगे एव दोषावहः।] कपोलौ—गण्डदेशौ, घर्मार्द्रौ—स्वेदाभिषिक्तौ, जातौ इति शेषः, किं बहुना, मनः उपरताः,—विरताः, अशेषाः,—समस्ताः, विषयाः,—बाह्येन्द्रियव्यापाराः यस्मात् तादृशं सत्, झटिति—सहसा, सान्द्रानन्दं—घनानन्दस्वरूपं, परमं ब्रह्म—परब्रह्म, स्पृशति—परब्रह्मसाक्षात्कारजनितसुखमिव सुखमनुभवति, परमानन्दरसमास्वादयति इत्यर्थः, ("वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः" इति रसानुभवलक्षणे ग्रन्थकृतोक्तत्वात्) ध्रुवं—निश्चितम्। अत्र स्तम्भस्वेदरोमाञ्चप्रलयाः उदाहृताः। शिखरिणी वृत्तं,—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्।

(ध) एवं विविधान्युदाहरणानि अवबोध्यानीत्याह, एवमिति।—यथा उदाहृते पद्ये स्तम्भस्वेदादयः कतिपये सात्त्विका भावा दर्शिताः, तथाऽन्येऽप्युदाहृता अपि विविधा अवबोध्या इति भावः। तथा च—"बाले! नाथ! विमुञ्च मानिनि रुषम्—" इत्यत्र स्वरभङ्गः, "मा गर्वमुद्वह—" इत्यत्र वेपथुः, "शोषं नीत्वा—" इत्यत्र वैवर्ण्यमश्रु चेति बोध्यम्। विस्तरस्त्वन्यत्र।

(न) व्यभिचारिभावमाह, विशेषादिति।—विशेषात्—विभावानुभावापेक्षया

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भाव-तिरोभावाभ्यामाभिमुख्येन चरणात् व्यभिचारिणः कथ्यन्ते। (प) के ते? इत्याह,—

**निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः**
**स्वप्नापस्मारगर्वा मरणमलसताऽमर्षनिद्राऽवहित्थाः।**
**औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधि-**
**सन्त्रासलज्जाः**
**हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्ता-**
**वितर्काः॥ १७२॥ (फ)**

---

सम्बन्धाभावात्, आभिमुख्येन—आनुकूल्येन, चरन्तः,—प्रादुर्भवन्तः, रसानुगुण्येन रत्यादौ रसरूपतया परिणममाना इत्यर्थः, स्थायिनि—रत्यादौ, उन्मग्नाः,—कदाचित् उद्भिन्नाः, बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूता इत्यर्थः, निमग्नाः,—विलय-प्रतीतिकत्वेन कदाचित् तिरोहिताः, ये धर्माः ते व्यभिचारिणः, ज्ञेया इति शेषः। ["चरन्तः" इत्यत्र "चरणात्" इति पाठे—स्थायिनि उन्मग्ननिमग्ना ये धर्माः, ते विशेषादाभिमुख्येन चरणात्—गमनात्, इत्येवं व्याख्येयम्] तद्भिदाः,—तेषां व्यभि-चारिणां भावानां, भिदाः,—प्रकाराः, यथाक्रमम्। एतत्तु मुख्यसङ्ख्यायाः व्यवच्छेदकं, न त्ववान्तरसङ्ख्यायाः, अत एवोक्तम्;—"हासक्रोधादयः शृङ्गारादौ व्यभिचारिणः" इति। एतदर्थमेव चकार उपन्यस्तः।

(प) कारिकाऽर्थं सुगमत्वात्, स्थिरतयेति।—स्थिरतया—स्थायिभावरूपेण, यावद्रसं तावत् स्थितिशालितयेत्यर्थः, वर्त्तमाने—अवस्थिते, हि—एव, न तु अनवस्थिते इति भावः, [एतेन रसान्तरे स्थिरतयाऽनवस्थितत्वे रत्यादीनामपि व्यभिचारित्वं सूचितम्, अत एवोक्तं "रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः" इति] रत्यादौ—रतिप्रभृतौ भावे, [विषये सप्तमीयम्] निर्वेदादयः,—वक्ष्यमाणास्त्रयस्त्रिंश-त्सङ्ख्यका निर्वेदादिप्रभृतयः, प्रादुर्भाव-तिरोभावाभ्याम्—समुद्रे तरङ्गवत् स्फुरणास्फुरणा-भ्याम्, आभिमुख्येन—आनुगुण्येन, चरणात्—सञ्चारितया, व्यभिचारिणः कथ्यन्ते।

(फ) तान् नामतो निर्दिशति, के इति।—ते—निर्वेदादयो व्यभिचारिणः, के?—किंनामानः? इति—आकाङ्क्षायाम्, आह, निर्वेदेत्यादि।—स्पष्टम्।

अथ आवेगः,—

आवेगः सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता।
उत्पातजे स्रस्तताऽङ्गे धूमाद्याकुलताऽग्निजे॥
राजोपद्रवजादेस्तु शस्त्रनागादियोजनम्।
गजादेः स्तम्भकम्पादिः पांश्वाद्याकुलताऽनिलात्॥
इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम्॥१७५॥(क)

स्वकुचयोरुत्तराभ्युपिधानं, तद्वचनाकर्णनेन मयेति पूर्वेणान्वयः। अस्मिन् पक्षे विषयविषयिणोः दर्शितावसंग्रहेण विषयस्य सम्बन्धाभेदमङ्गीकृत्य निगरणम्, अतोऽत्र रूपकोपपादकः अतिशयोक्त्यलङ्कारः। पूर्वपक्षे—तत्त्वज्ञानजम्, अस्मिन् पक्षे—पुनः आपदुत्थं आवमानं (निर्वेदः) बोध्यम्। एवमन्यदपि।

(क) सप्रभेदमावेगमाह, आवेग इति।—सम्भ्रमः,—सहसा उपस्थितघटनाजनितमनोवेगः, आवेगः। तत्र—आवेगे, वर्षजे—वृष्टिजाते सति, पिण्डिताङ्गता—सङ्कुचिताङ्गत्वं, भवति इति शेषः। ["वर्षजे" इत्यत्र "हर्षजे" इति पाठान्तरे,—उल्लासजनिते आवेगे, अङ्गवत् संश्लिष्टावयवता इत्यर्थः। "पीडिताङ्गता" इति पाठस्तु स्पष्टार्थः] उत्पातजे—उत्पातात् जाते, दिव्यनाभसभूमिजरूपत्रिविधोत्पातजन्ये सति इत्यर्थः, अङ्गे—शरीरे, स्रस्तता—शैथिल्यं, भवति इति शेषः। अग्निजे, आवेगे सति, धूमादिभिः आकुलता, भवति इति शेषः। राज्ञामुपद्रवात्—युद्धायोजनादिरूपाज्जायते इति च आदिर्यस्य तस्मात् हेतोः, शस्त्रनागादियोजनम्—आत्मरक्षार्थं राजवाहाद्यार्थं वा शस्त्रनागादीनामायोजनमित्यर्थः, भवति। ["राजविद्रवजादेः" इति पाठान्तरेऽपि अयमेवार्थः; आदिना चौरोपद्रवजादीनां ग्रहणम्]। गजादेः, जाते इति शेषः, आवेगे सतीति भावः, स्तम्भकम्पादिः, जायते इति शेषः; अनिलात्, जाते इति शेषः, प्रभञ्जनवायुजनिते आवेगे सतीत्यर्थः, पांश्वादिभिः,—धूल्यादिभिः, आकुलता, भवति इति शेषः। इष्टात्—अभिलषितार्थसिद्धेः, जाते इति शेषः, आवेगे सति, हर्षाः,—आनन्दाः, तज्जनितमुखविकासादयः इति यावत्। अनिष्टात्—अहितात्, अभिलषितार्थविरोधिवस्तूपस्थितेरिति भावः, जाते इति शेषः, आवेगे शुचः,—शोकाः, मुखवैवर्ण्यादयोऽनुभावाः भवन्ति इत्यर्थः। अन्ये—आवेगाः, यथायथं ज्ञेयाः,—ऊहितव्याः।

तत्र शत्रुजो यथा,—

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥" (य)

एवमन्यत् ज्ञेयम् ।

अथ दैन्यम्,—

दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनताऽऽदिकृत् ॥ १७५ ॥ (र)

यथा,—

"वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणाऽवशेषं गृहं,
कालोऽभ्यर्णजलागमः, कुशलिनी वत्सस्य वार्त्ताऽपि नो ।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला,
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥" (ल)

---

[ एवञ्च,—सम्भ्रम आवेग इत्यावेगस्य सामान्यं लक्षणं, वर्षजादयश्च तस्य भेदाः । अतो चापलजा इति यथायथं लक्षणमूह्या इति सूचितम् ] ।

(य) शत्रुजमावेगमुदाहरति, अर्घ्यमिति ।—सः,—भार्गवः, अर्घ्यम् अर्घ्यं, गृहाणेति शेषः, इति वादिनं नृपं—दशरथम्, अनवेक्ष्य—अनवलोक्य, यतः,—यस्मिन् प्रदेशे, भरताग्रजः,—रामः, तिष्ठतीति शेषः, ततः,—तत्र प्रदेशे, क्षत्रेषु कोप एव दहनः,—अग्निः, तस्य अर्चिः,—भाः, शिखा इति यावत्, तदिव अर्चिः यस्याः तां, ("ज्वालाभासोर्नपुंस्यर्चिः" इत्यमरः) उदग्रतारकां—तीक्ष्णतारां, दृशं—चक्षुषं, सन्दधे—संहितवान् । अत्रार्घ्यमर्घ्यमिति मुहुर्वदतो दशरथस्य भार्गवदर्शने सम्भ्रमः । रघुवंशस्येदं पद्यम् । उपजातिः वृत्तम् ।

(र) दुःखदारिद्र्यादिमहापराधोत्पन्नः स्वनीचत्वप्रख्यापनाहेतुः मनोऽवस्थाविशेषः दैन्यं, तदाह, दौर्गत्याद्यैरिति ।—दौर्गत्याद्यैः,—दारिद्र्यादिभिः हेतुभिः, [ अत्रादिपदेन श्रमादेर्ग्रहणम् ] मलिनताऽऽदिकृत् अनौजस्यम्—ओजः बलं तेजो वा तच्छून्यत्वं, निस्तेजस्त्वमिति यावत्, दैन्यं—दीनत्वं नाम व्यभिचारिभावः कथ्यते ।

(ल) उदाहरति, वृद्ध इति ।—कस्याश्चिद्दरिद्रायाः दशावर्णनमिदम् । एषः पतिः वृद्धः, अन्धः च अन्धः, अत एव मञ्चकगतः,—पर्यङ्कशायी, [ एतेन अस्य अकर्मण्यत्वम्, उत्थानशक्तिरहितत्वम्, अत एव ततः पोषणादिप्राप्त्यनाऽसम्भवत्वं, अस्याः तच्चिन्ताऽऽकुलत्वं व्यज्यते ] गृहं स्थूणाः,—स्तम्भादय एव, अवशिष्टाः

अथ श्रमः,—

खेदो रत्यध्वगत्यादेः श्वासनिद्राऽऽदिकृच्छ्रमः ॥१७७॥(ब)

यथा,—

"सद्यः पुरीपरिसरे च शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता ।
गन्तव्यमस्ति कियदित्यसकृत् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥" (अ)

यत्र तादृशं, निपतनाभिमुखमिति यावत्, [ एतेन तद्द्वारेऽवगतत्वकथनेन निर्धनत्वं व्यज्यते ] कालः,—समयः, अभ्यर्णजलागमः,—अभ्यर्णः,—समीपवर्ती, जलागमः,—जलपातः यत्र तादृशः, वर्षाप्रारम्भः इति यावत्, [ एतेन स्वतः पतनाभिमुखस्य तादृशस्य गृहस्य वर्षायाम् अवश्यपतनसम्भावनया तत्र अवस्थाने प्राणधारणस्यैव संशयितत्वाशङ्का, अतस्तदानयनतयाऽप्यवस्थानं दुःशकं, किं पुनः स्थानान्तरात् आहार्यादिसङ्ग्रहणम् इति व्यज्यते ] वत्सस्य—विदेशगतस्य पुत्रस्येत्यर्थः, कुशलिनो—कल्याणिनो, वार्ता—वृत्तान्तः अपि, नो, उपलभ्यते इति शेषः, [ एतेन शोक-व्याकुलताऽतिशयो व्यज्यते, "पुत्रशोको महाकष्टम्" इति प्रसिद्धिस्तु तन्मूलम् ] यत्नात्—अवधानादपि इतस्ततो याचनादिव्यापारात्, सञ्चिततैलबिन्दुघटिका—सञ्चितानां तैलबिन्दूनां घटिकाऽल्पो घट इत्यर्थः, कतिपयतैलबिन्दूनामेव यदत्यल्पं पात्रं समासीत् तत् इत्यर्थः, भग्ना, [ एतेन पोषणप्रतिकाराभावोऽपि व्यज्यते ] इति—एवमनेकासा-आपदामुत्तरोत्तरमापातात् हेतोः, पर्याकुला—व्याकुला, श्वश्रूः निजवधूम्—आत्म-स्नुषां, गर्भभरालसां—पूर्णगर्भाम्, आसन्नप्रसवामिति भावः; दृष्ट्वा चिरं रोदिति । शार्दूलविक्रीडितं वृत्तम् ।

(ब) श्रममाह, खेद इति ।—रत्यध्वगत्यादेः,—सुरताध्वगमनादिभिः, श्वासस्य निद्राऽऽदेश्च कारकः खेदः,—अवसादः, श्रमः । अनेकशारीरव्यापारोत्पन्ननिश्वासाङ्ग-मर्दननिद्राऽऽदिकारणभूतः अङ्गावसादविशेषः श्रमः इति सारः । एष हि शारीरे कर्मणि वर्तमानेऽपि समुत्पद्यते, ग्लानिः न तथा इति ग्लानेरस्य विशेषः ।

(अ) उदाहरति, यथा इति ।—महानाटके सीतया सह रामस्य वनगमना-ऽऽरम्भवर्णनमिदम् । शिरीषमृद्वी—शिरीषकुसुमसदृशसुकुमारावयवेत्यर्थः, सीता—जानकी, पुर्याः,—अयोध्यायाः, परिसरः,—प्रान्तभागः तस्मिन् अयोध्यायामेव, न तु

अथ मदः,—

**सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः।**
**अमुना चोत्तमः शेते, मध्यो हसति गायति॥**
**अधमप्रकृतिश्चापि परुषं वक्ति रोदिति॥१७८॥ (च)**

यथा,—

"प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रवहते परिहासः॥" (छ)

---

ततः किञ्चिद्दूरं वनादेः प्रान्तदेशे इत्यर्थः, ("पर्य्यन्तभूः परिसरः" इत्यमरः) जवात्—वेगात्, त्रिचतुराणि—त्रीणि वा चत्वारि वेति तथोक्तानि, पदानि यावत्, गत्वा च—गत्वैव, सद्यः,—तत्क्षणं, "कियत् गन्तव्यमस्ति" इति असकृत्—पुनः पुनः, ब्रुवाणा—कथयन्ती, पृच्छन्ती सतीति यावत्, रामस्य अश्रु—नयनजलं, तस्य प्रथमावतारं—पूर्वाविष्करणं, कृतवती, तत्पूर्वं न कदाऽपि कश्चित् रामस्यास्रूद्गमं कृतवान्, किन्तु तदानीं सीतैव तथा ब्रुवती कृतवतीति भावः। [अत्र वारंवारं गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथलङ्घनेऽपि श्रममवधार्य्य श्रीरामस्य रोदनमवगन्तव्यम्]। वसन्ततिलकं वृत्तम्।

(च) सप्रभेदं मदमाह, सम्मोहेति।—मद्यस्य—आसवस्य, उपयोगः,—पानं, तस्मात् जातः, सम्मोहानन्दयोः सम्भेदः,—सम्मेलनः, मदः, आसवाद्युपयोगोद्भवः सुखासङ्गः स्वापप्रहसितादिनिमित्तः मनोवृत्तिविशेषः मदः इति निष्कर्षः। अस्य त्रैविध्यसूचनाय अनुभाववैविध्यमाह, अमुनेति।—अमुना—मदेन, उत्तमः,—साधुशीलो जनः, शेते; मध्यः,—नातिनीचो न चात्युत्तमो लोकः, हसति गायति च; अधमप्रकृतिः,—नीचस्वभावो जनः, परुषं—कर्कशं, वक्ति रोदिति च, अतोऽयं त्रिविधानुभावतया त्रिविध इति बोध्यम्।

(छ) उदाहरति, प्रातिभमिति।—त्रिसरकेण—त्रिवारमधुपानेनेत्यर्थः, ["सरकं शीधुपात्रे स्यात् शीधुपाने च शीधुनि" इति विश्वः। "त्रिपानं मदातिभूमिः" इति पानविधिः। "तद्धितार्थोत्तरपदसमाहारे च" (२।१।५१ पा०) इति द्विगुः। "पात्राद्यन्तस्य न" (वा०) इति पात्रादित्वात् नपुंसकत्वम्] प्रातिभं—प्रतिभा—ज्ञानबीजभूतः संस्कारविशेषः, तत्र भवं तत् तथोक्तं, ज्ञानप्रभावविशेषमिति भावः, [भवार्थेऽण्] यद्वा,—प्रतिभा बुद्धिविशेष एवेति तत् तथोक्तं [स्वार्थेऽण्] प्रागल्भ्यं, गतानां

अथ जड़ता,—

अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र ॥ १७९ ॥ (क)

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये,—

"णवरिअ तं जुअजुअलं अण्णोण्णणिहिदसजलमंथरदिट्ठिम् ।
आलेक्खओपिअं विअ खणमेत्तं तत्थ संठिअं मुत्तसण्णम् ॥" (ख)

—विवाहमधुपानोद्भूतमदोद्धतयोर्युवयोः इत्यर्थः, सुभ्रुवा—रमणीना, वक्रवाक्यरचनारमणीयः,—वक्रं—श्लिष्टार्थकं, यत् वाक्यं तस्य रचनया रमणीयः, श्लिष्टार्थकवाक्यप्रयोगद्वारा मनोहर इति भावः, गूढ़ानि—प्रथमं लज्जया सङ्गुप्तानि, सूचितानि—तत्क्षणे मदेन प्रकटीकृतानि, रहस्यानि—गाम्याङ्गभङ्गीव्यापारप्रजल्पनादीनि यस्मिन् स गूढ़सूचितरहस्यः, स चासौ यहासश्च इति, [विशेषणसमासोऽयं, वैकल्पिकविशेषणविशेष्यभावात् ] ("हासो हास्यम्" इत्यमरः ) परिहासः,—नर्मकेलिः, उपहासचेष्टा इति यावत्, ( "द्रवकेलिपरीहासाः" इत्यमरः ) प्रवृत्ते—प्रवृत्तः । श्रियपानवसेदं पद्यम् । उपजातिः वृत्तम् ।

( क ) जड़तामाह, अप्रतिपत्तिरिति ।—इष्टानिष्टयोः,—प्रियाप्रिययोः, दर्शनश्रुतिभिः अप्रतिपत्तिः,—कर्त्तव्याकर्त्तव्यमूढ़ता, जड़ता स्यात् । तथा हि,—वियोग भीतिचिन्तोत्कण्ठाऽतिप्रेष्ठानिष्टप्रेक्षणश्रवणादिसमुत्पन्नानिश्चितकर्त्तव्यविषयकिञ्चित्करत्वात्मा मनोवृत्तिः जड़ता इति निष्कर्षः। तत्र—जड़तायाम्, अनिमिषेण—निर्निमेषेण, नयनेन निरीक्षणं, तूष्णीम्भावः,—मौनित्वं, तत्प्रभृतयः, भवन्तीति शेषः। [ एषा हि कदाचित् मोहात् पूर्वं, कदाचित् परञ्च समुत्पद्यते ; यदाहुः प्राचीनाः,—"कार्याविवेको जड़ता पश्चतः पुरतोऽपि वा । तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥ अनुभावास्तनो तूष्णीम्भावविस्मरणादयः । सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम् ॥" इति ] एवञ्च मोहात् पूर्वकालीना उत्तरकालीना चेति द्विविधेयं वेदितव्यम् ।

( ख ) अतिप्रेष्ठप्रेक्षणजन्यामुदाहरति, णवरिअ इति ।—[ "केवलं तत् युवयुगलमन्योऽन्यनिहितसजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसंज्ञम् ॥" इति संस्कृतम्] । कदाचित् पथि सन्निहितयोः परस्परं दृष्टिं निक्षिपतोः कयोश्चित् मिथुनयोः कदाचित्तनमनस्का इत्थम् उक्तिरियम् ; यथा,—बहुकालात् परं

अथ उग्रता,—

शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता।

तत्र स्वेदशिरःकम्पतर्जनाताडनादयः॥ १९० ॥(ख)

यथा,—

"प्रणयिसखीसलीलपरिहासरसाधिगतै-
ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥" (ग)

---

मिलितयोः नायकनायिकयोः अवस्थां दृष्टवत्याः सख्या उक्तिरियम्। [ अत्र "युव-युगलम्" इत्यत्र युवा च युवती च इत्येकशेषः। अपरिचयशब्दः केवलार्थे देशीयः ]। तत् युवयुगलं—तरुणद्वन्द्वं, केवलम्—अनन्यव्यापारं यथा तथा, अन्योऽन्यस्मिन् निहिता—अर्पिता, सजला—अश्रुपूर्णा, मन्थरा—जडा, दृष्टिः येन तादृशम्, अत एव आलेख्यार्पितमिव—चित्रलिखितमिव, मुक्तमुखम्—वाक्यरहितं सत्, तत्र षण्मासान् संस्थितम्—अवस्थितमित्यर्थः। स्कन्धकनामैतत्। तल्लक्षणं यथा,—"स्कन्धकमिति तत् कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात्। तत्तुल्यमपिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम्॥" इति।

(ख) उग्रतामाह, शौर्येति।—शौर्यं—बलप्रकाशनम्, अपराधः,—अन्यकृतापकारः, एवमादिभ्यः भवतीति तथोक्तं, चण्डत्वम्—अत्यन्तासहिष्णुत्वं, तीक्ष्णत्वमित्यर्थः, उग्रता स्यात्। अस्यानुभावान् निर्दिशति, तत्रेति।—तत्र—तस्याम् उग्रतायां सत्यामित्यर्थः, स्वेदः, शिरःकम्पः, तर्जना, ताडनादयश्चानुभावा भवन्ति इति शेषः।

(ग) उदाहरति, प्रणयीति।—प्रणयिनी—प्रेमवती, या सखी—सहचरी, तस्याः सलीलः—सविलासः, यः परिहासः,—केलिः, तस्य रसेन—अनुरागेण, अधिगतानि—प्राप्तानि तैः, ललितैः,—सुन्दरैः, शिरीषपुष्पैः यानि हननानि—प्रहाराः तैः अपि, यत्—वपुः, मालत्या इति शेषः, ताम्यति—क्लाम्यतीत्यर्थः, तत्र वपुषि—मालतीशरीरे, वधाय—हन्तुं, शस्त्रं—बाणम्, उपक्षिपतः,—उत्तोलयतः, तव शिरसि एषः,—उद्यत इत्यर्थः, भुजः, मम इति भावः, अकाण्डयमदण्ड इव—अप्रत्याशितागतयमदण्ड इत्यर्थः, पततु। आशंसितत्वेन अप्रतिक्रियत्वमुक्तम्। भुज-पदेन बाहुव्यापारेणैव हन्तव्योऽसीति शौर्यातिशयः उक्तः। मालतीमाधवस्येदं

अथ अपस्मारः,—

मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।
भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥१८४॥ (ञ)

यथा,—

“आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥” (ट)

---

स्वप्नसन्दर्शनेषु—स्वप्नाः,—सुप्तजनानां विज्ञानानि, सन्दर्शनानि—ज्ञानानि तेषु, [ सुप्तज्ञानादिवत्सामान्यविशेषभावेन षष्ठ्यर्थः ] (“स्वप्नः सुप्तस्य विज्ञानम्” इति विश्वः । “दर्शनं नयने ज्ञाने दृष्टौ स्वप्नेऽपि संविदि” इति शब्दार्णवः ) यद्वा,—स्वप्ने—निद्राकालिकविषयानुभवे, यत् सन्दर्शनम्—अवलोकनं तेषु, मया कथमपि—महता आयासेन, लब्धायाः,—उपनीतायाः, दृष्टाया इति यावत्, ते—तव, निर्दयाश्लेषहेतोः,—निर्गता दया परपीडनावहित्वं यत्र तादृशोऽसौ आश्लेषः,—आलिङ्गनं, स एव हेतुः तस्मात्, गाढालिङ्गनार्थमिति भावः, आकाशे—निर्विषये देशे इत्यर्थः, प्रणिहितभुजं—प्रणिहितौ व्यापितौ, भुजौ येन तादृशं, प्रसारितबाहुमिति यावत्, मां पश्यन्तीनां स्थलीदेवतानां—वनदेवतानां, मुक्तास्थूलाः,—मुक्ता इव स्थूलाः, अश्रुलेशाः,—नयनोदबिन्दवः, तरुकिसलयेषु—वृक्षाणामभिनवपत्राङ्कुरोपरिभागेषु इत्यर्थः, बहुशः,—बहुवारं, न खलु पतन्ति, इति न, किन्तु पतन्त्येवेति भावः । अत्र,—“महात्म-गुरु-देवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महादुःखं मरणञ्च भवेत् ध्रुवम् ॥” इति पृथिव्यां देवाश्रुपातनिषेधदर्शनात् यक्षस्य मरणाभावसूचनार्थं तरुकिसलयेषु पतन्ति इत्युक्तमवधेयम् । मेघदूतस्येदं पद्यम् । मन्दाक्रान्ता वृत्तम् ।

(ञ) अपस्मारमाह, मन इति ।—ग्रहादीनाम्, ( आदिपदेन भूतादीनां परिग्रहः ) आवेशनादिना—आक्रमणादिना, (आदिपदेन धातुवैषम्यादिपरिग्रहः) जनितः मनसः,—चित्तस्य, क्षेपः,—विकृतिः, अपस्मारः, तत्र भूपातः,—भुवि पतनं, कम्पः, प्रकृष्टः स्वेदः, फेनलालादीनामुद्गमश्च भवति । अतोऽत्र भूमिपातादयोऽनुभावा वेदितव्याः ।

(ट) उदाहरति, आश्लिष्टेति ।—असौ—कृष्णः, आश्लिष्टा—आलिङ्गिता, भूमिः,—भूमितलं येन तथोक्तम्, [ एतेन भूपातः सूचितः ] उच्चैः,—उच्चस्वरेण, रसितारं—शब्दं कुर्वन्तं, लोलन्तः,—चञ्चलन्तः, भुजाकाराः,—हस्ततुल्याः, बृहन्तः,—महान्तः, तरङ्गाः यत्र तादृशं, फेनायमानं—फेनमुद्गमयन्तम्, आपगानां—

अथ गर्वः,—

**गर्वो मदः प्रभावश्रीविद्यासत्कुलताऽऽदिजः ।**
**अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥१८५॥ (ठ)**

शौर्यगर्वो यथा,—

"धृतायुधो यावदहं तावदन्यैः किमायुधैः ? ।
यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यताम् ? ॥" (ड)

अथ मरणम्,—

**शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् ॥१८६॥ (ढ)**

नदीनां, पतिं—समुद्रम्, अपस्मारिणम्—अपस्माररोगग्रस्तम्, आशङ्के—तर्कितवान्। भूमिपातोच्चैरस्वनभुजाकारतरङ्गास्फोटनफेनोद्गमनादिना समुद्रोऽपस्मारवत् इवाचरतीति भावः। अत एवात्रापस्मारध्वननम्। त्रिष्टुपाख्यवृत्तस्येदं पद्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः।

(ठ) गर्वमाह, गर्व इति।—प्रभावः,—कोषदण्डादिजन्यः प्रतापः, श्रीः,—सम्पत्तिः, विद्या—आन्वीक्षिक्यादिषु ज्ञानं, तथा सत्कुलतादि—आभिजात्यादिकम्, [आदिपदेन सौन्दर्यादीनां परिग्रहः] तस्मात् जातः,—उत्पन्नः, यो मदः,—अहङ्कारः, चित्तविकारविशेषः इति यावत्, स गर्वः,—तन्नाम्ना प्रसिद्धः; स च अवज्ञा—लोकान् प्रति हेयत्वबुद्धिः, सविलासं—सभङ्गि, अङ्गदर्शनं, [ "दर्शनम्" इति तु णिजन्ताणिजन्तदृशधातोः रूपं, तेन णिजन्तपक्षे आत्मना आत्मशरीरावलोकनम्, अन्यत्र—परकीयलोचनविषयीकरणम् इति ] तथा अविनयादिः,—अशिष्टव्यवहारादिस्तान् करोतीति तथोक्तः, [ "सुकर्मपापमन्त्रपुण्येषु कृञः" (३।२।८ पा०) इति क्विप्, केचित् तु ताच्छील्ये क्विप् इति ] तथा च—प्रभावादिकारणकोऽवज्ञाऽऽद्यनुभावको मानसविकारो गर्वो ज्ञेय इति निष्कृष्टम्।

(ड) उदाहरति, धृतायुध इति।—वेणीसंहारे अश्वत्थाम्न उक्तिरियम्। यावत्—यत्कालपर्यन्तम्, अहं धृतायुधः,—शस्त्रधारी सन्, तिष्ठामीति शेषः, तावत् अन्यैः,—मद्धृतायुधभिन्नैरित्यर्थः, आयुधैः,—शस्त्रैः, किम् ? विफलमन्येषामस्त्रधारणमिति भावः। मम अस्त्रेण यत्—कार्यं, न सिद्धं—न निष्पन्नं, तत्—कार्यं, केन वा साध्यताम् ? वदेति शेषः।

(ढ) मरणमाह, शराद्यैरिति।—शराद्यैः,—बाणप्रहाराद्यैः, [अत्र आद्यपदेन

यथा,—

"राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥" (च)

---

रोमाञ्चो वर्णनातापादीनां परिग्रहः] जीवस्य—जीवनस्य, त्यागः,—उपचारात् तदानीन्तनी अवस्था, न तु तत्प्राग्वर्त्तिनीति भावः, मरणम्; तत्र भूपतनादि भवति । [ अत्र विशेषो यथा रसगङ्गाधरे—"रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम्; न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुं, चित्तवृत्त्यात्मकेषु भावेषु तस्य अप्रवृत्तेः; भावेषु च सर्वेषु कार्य्यत्ववर्त्तितया शरीरप्राणयोगस्य हेतुत्वात्" । उदाहरणम्;—"दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत् । अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि ॥" प्रियविरहोऽत्र विभावः, वचनविरामोऽनुभावः, हन्तपदस्वारस्याल्लभ्यमुपकारकत्वाद्वाक्यस्थोऽप्ययं भावः पदव्यङ्ग्यतामावहति, दयितस्य गुणाननुस्मरन्तीत्यनेन व्यञ्जनानां चरमावस्थायामपि तस्या दयितगुणविस्मरणं मा भूदिति विप्रलम्भस्य शोकस्य वा चरममभिव्यक्तस्य पोषकम् । अयञ्च विवेकः,—अव्यवहितवाक्योत्तरवर्त्तिना वाक्यान्तरेण सन्दर्भघटकेन नायिकाऽऽदेः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति । कवयः पुनरमुं प्राधान्येन न वर्णयन्ति, अमङ्गलप्रायत्वात् । प्रदीपकारा अप्याहुः,—"जीवस्योद्गमना-ख्यो मरणं परिकीर्त्तितम् । सम्मोहेन्द्रियसंस्थानिगात्रविक्षेपणादिकृत् ॥" इति ]।

(च) उदाहरति, रामेति ।—दुःसहेन—सोढुमशक्येन, राममन्मथशरेण—राम एव मन्मथः कामः, अथवा,—रामः,—अभिरामः, मनोहर इत्यर्थः, मन्मथः, तस्य शरेण, हृदये—वक्षसि, पक्षे—मनसि च, ("हृदयं मनउरसोः" इति विश्वः) ताड़िता—आहता, विद्धा इति यावत्, अत एव गन्धवद्रुधिरचन्दनोक्षिता—गन्धवत् दुर्गन्धि, यत् रुधिरम् असृक्, तदेव चन्दनं चन्दनस्थानीयमित्यर्थः, तेन उक्षिता सिक्ता; अपरत्र,—गन्धवती ये रुधिरचन्दने कुङ्कुमचन्दने, ताभ्याम् उक्षिता सती, ("रुधिरं कुङ्कुमासृजोः" इति विश्वः) सा—विख्याता, निशासु चरतीति निशाचरी—राक्षसी, ताड़केति यावत्, अन्यत्र,—अभिसारिका नायिका इत्यर्थः, जीवितेशवसतिं—जीवितेशः यमः, अन्यत्र,—प्रियः, ("जीवितेशो यमे पुंसि प्रिये स्याज्जीवितेश्वरे" इति मेदिनी) तस्य वसतिं—वासस्थानं, जगाम । अत्राभिसारिकायाः प्रियवसतिं अभिसरणं व्यक्तं, यमवसतिगमनं प्रकाशश्च ताड़काया वाच्यम् इति बोध्यम् । रघुवंशस्येदं पद्यम् । रथोद्धता छन्दः,—"रान्नराविह रथोद्धता लगौ" इति तल्लक्षणात् ।

अथ आलस्यम्,—

"आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भाऽऽसितादिकृत्॥१८७॥(त)

यथा,—

"न तथा भूषयत्यङ्गं न तथाऽऽभाषते सखीम्।
जृम्भते मुहुरासीना बाला गर्भभरालसा॥" (थ)

अथ अमर्षः,—

निन्दाऽऽक्षेपापमानादेरमर्षोऽभिनिविष्टता।
नेत्ररागशिरःकम्प-भ्रूभङ्गोत्तर्जनादिकृत्॥१८८॥(द)

यथा,—

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्॥" (ध)

---

(त) आलस्यमाह, आलस्यमिति।—श्रमेण गर्भादिना वा [आदिपदेन प्रचुरभोजनादेः ग्रहणम्] शरीरस्य जाड्यम्—आलसनानुष्ठानत्वमित्यर्थः, कर्मस्वप्रवृत्तिरिति यावत्, आलस्यम्; तत्र जृम्भा, आसितम्—उपवेशनं, तदादिकं भवति, किन्तु इदमवधेयम्,—अत्र न सर्वथा सामर्थ्याभावः, नापि कार्याकार्यपरिज्ञानता, अतः कार्याकरणरूपस्य अनुभावस्य समानत्वेऽपि नैषं व्याधिर्न वा जडतेति।

(थ) आलस्यमुदाहरति, नेति।—बाला—कामिनी, गर्भभरेण अलसा—मन्थरा सती, अङ्गं तथा—पूर्ववदित्यर्थः, न भूषयति—नालङ्करोति, सखीम् तथा न आभाषते—सख्या सममपि आलापं न करोतीत्यर्थः, केवलम् आसीना—उपविष्टा सती, मुहुः,—पुनः पुनः, जृम्भते—आलस्यं प्रकटयति इति भावः। अत्र गर्भभरात्मकः, शरीरशैथिल्यमानसवेदनाकारकोद्दीपकः, मन्दगमनाद्यनुभावश्च, आलस्यं नाम व्यभिचारी प्रतीयते।

(द) अमर्षमाह, निन्देति।—निन्दा—गर्हा, आक्षेपः,—तिरस्कारः, अपमानम्—अवज्ञा, इत्यादिभिः [अत्रादिपदेन विनयच्युतादेर्ग्रहणम्] अभिनिविष्टता—वैरनिर्यातनाद्यभिनिवेशः, अमर्षः। क्रोधस्तु उत्कटापचिकीर्षा; इत्यनयोर्भेदः। अत्र नेत्ररागः,—चक्षुषी रक्तत्वं, शिरःकम्पः, भ्रूभङ्गः, तथा तर्जनादि भवति।

(ध) उदाहरति, प्रायश्चित्तमिति।—निष्कृतिमाचरिष्यामि, अपि परशुरामोक्तिः

अथ निद्रा,—

चेतःसम्मीलनं निद्रा श्रमक्लममदादिजम् ।

जृम्भाऽक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ॥१८९॥ (न)

यथा,—

"सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् ।

निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥" (प)

अथ अवहित्था,—

भयगौरवलज्जाऽऽदेर्हर्षाद्याकारगुप्तिरवहित्था ।

व्यापारान्तरसक्त्यन्यथाऽवभाषणविलोकनादिकरी ॥१९०॥ (फ)

---

रिष्यम् । पूज्यानां वः,—युष्माकं, व्यतिक्रमात्—विरोधेन आज्ञाभङ्गात्, प्रायश्चित्तं—पापमोचनानुकूलं कर्म, चरिष्यामि, येन पूज्यपूजाव्यतिक्रमजं पापं नश्येदिति भावः ; तु—किन्तु, शस्त्रग्रहः,—शस्त्रधारणमेव, महाव्रतम्, एवं—उद्दिष्टकार्यमनिष्पाद्यैव व्यागच्छेव, न दूषयिष्यामि ; भवद्भिः पूज्यैः शस्त्रग्रहणं मम निषिध्यते, अहन्तु भवतां तदाज्ञामवधीर्यैव अधुना शस्त्रग्रहणेन व्रतं पालयिष्यामि, पश्चात् प्रायश्चित्तं चरिष्यामीति भावः । महावीरचरितस्थेदं पद्यम् ।

(न) निद्रामाह, चेत इति ।—श्रमेण, क्लमेन—क्लान्त्या, मदादिना च जनितं चेतसः,—चित्तस्य, सम्मीलनं—मुकुलीभावः, मेध्यानाड़ीप्रवेशेन निश्चलत्वमित्यर्थः, निद्रा, तत्र जृम्भा, अक्षिमीलनम्, उच्छ्वासः, तथा गात्रभङ्गादिश्च भवति ।

(प) उदाहरति, सार्थेति ।—सख्यं प्रति कस्यचिन्नायकस्य उक्तिः । सा—मत्कान्ता, निद्रया अर्द्धमीलिते अक्षिणी यस्याः तथाभूता, अत एव सार्थकानि—अर्थयुक्तानि, अनर्थकानि—अर्थविरहितानि च, पदानि यस्मिन् तत् यथा तथा, मन्थराणि—मन्दानि, असम्पूर्णानि वा, अक्षराणि यस्मिन् तत् यथा तथा, ब्रुवती सती, मे—मम, हृदि लिखितेव,—चित्रितेव, वारंवारिकस्मरणस्फोरणात् इति भावः, अस्ति । यथा वा "निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् । अदर्शि सङ्गोप्य कदाऽप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥" इति ।

(फ) अवहित्थामाह, भयेति ।—भयात् गौरवात् लज्जाऽऽदेश्च हेतोः हर्षादीनाम् आकाराणां—तत्तद्भावसूचकमुखरागादीनामित्यर्थः, गुप्तिः,—गोपनं, संवरणमिति

यथा,—

"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥" (ब)

अथ औत्सुक्यम्,—

इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत् ॥१९१॥ (भ)

यथा,—

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥" (म)

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं, तत्

---

श्रावत्, अवहित्था—न वहिः स्थानमिति तथोक्ता, [ 'सुपि स्थः' ( ३।२।४ पा० ) इत्यत्र "स्थः" इति विभागे कप्रत्यये कृते, स्त्रियां पुनष्टापि पृषोदरादित्वात् रूपमिदम् ] तत्र व्यापारान्तरे—कार्य्यान्तरे, सक्तिः,—आसक्तः, अन्यथा—अप्रकाशनस्य, अवभाषणं विलोकनादिकञ्च भवति । [ अत्रादिपदेन क्रियामात्राणां परिग्रहः ] ।

(ब) उदाहरति, एवमिति ।—देवर्षौ—नारदे, एवंवादिनि सति, पितुः,—हिमाद्रेः, पार्श्वे, स्थिता इति शेषः, पार्वती अधोमुखी—अवनतवदना सती, लीलाकमलपत्राणि—क्रीडार्थं धृतस्य पद्मस्य पत्राणि, गणयामास । अत्र कमलपत्रगणनया महादेवेन समं भाविनः स्वपरिणयस्य प्रेष्ठत्वसूचनं गूहितम् । कुमारसम्भवस्येदं पद्यम् ।

(भ) औत्सुक्यमाह, इष्टेति ।—इष्टस्य—प्रियस्य, अनवाप्तेः,—अप्राप्तेः हेतोः, कालक्षेपस्य—कालविलम्बस्य, असहिष्णुता औत्सुक्यम्; तत्र चित्तस्य—मनसः, तापः, त्वरा, स्वेदः, दीर्घनिश्वासादिकं भवति ।

(म) उदाहरति, य इति ।—व्याख्यातं पद्यमिदं काव्यनिरूपणप्रस्तावे १५ पृष्ठे । अत्र "समुत्कण्ठते" इति पदेन नायकेन समनुभूतस्य रेवारोधसि तत्सुरतविधेरौत्सुक्यं स्फुटं नायिकायाः प्रतीयते ।

रसनधर्मयोगित्वात् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम्। (य)

अथ उन्मादः,—

**चित्तसम्मोह उन्मादः कामशोकभयादिभिः।**
**अस्थानहासरुदितगीतप्रलपनादिकृत् ॥१८२॥** (र)

यथा मम,—

"भ्रातर्द्विरेफ! भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम्?"।

(झङ्कारमनुभूय सानन्दम्)

"ब्रूषे किमोमिति सखे! कथयाशु तन्मे
किं किं व्यवस्यति? कुतोऽस्ति? च कीदृशीयम्?॥" (ल)

(य) अत्रेत्यादि।—अत्र—अभिनुदाहृते पद्ये, काव्यप्रकाशकारैः रसस्य प्राधान्यम् इत्येवं यत् उक्तं,तत् रसनधर्मयोगित्वात्—"रस्यते" इत्येवमास्वादनधर्मप्राप्तितया, व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन—रसवाच्यत्वोपपत्त्या, गतार्थं—प्राप्तविषयम् इति मन्तव्यम्। अयं भावः,—अत्रानुभावादिकृतपरिपोषरहिततया रतेः सम्पूर्णरसत्वं न सम्भवति, वर्णनीयतया चमत्कारित्वेन औत्सुक्यस्यैव प्राधान्यम्; अत एव प्रकाशटीकाकारा अप्याहुः,—"रसपदं चात्र सम्भोगव्यभिचार्य्यौत्सुक्यमाह "रस्यते आस्वाद्यते" इति व्युत्पत्त्या, न तु सम्भोगनामा रसः, स्वाधीनपतिकायाः क्रीडाख्यानं प्रत्युत्सुकतायाः वर्णनीयत्वात्" इति।

(र) उन्मादमाह, चित्तेति।—कामशोकभयादिभिः हेतुभिः चित्तस्य सम्मोहः,—चेतनाचेतनादिविशेषज्ञानजननाक्षमत्वम्, उन्मादः; तत्र अस्थाने—हासादेरविषये, हासः, रुदितं, गीतं, प्रलपनं—प्रलापः, इत्यादिकं भवति। तथोक्तं नाट्यशास्त्रकारैः,—"इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्। विविधाच्चित्तविकाराद्उन्मादो नाम सम्भवति॥ अनिमित्तहसितरुदितोपविष्टगीतप्रधावितोत्क्रुष्टैः। अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत॥" इति।

(ल) उदाहरति, भ्रातरिति।—हे भ्रातः द्विरेफ!—भ्रमर! समन्तात्—चतुर्दिक्षु, भ्रमता भवता मम प्राणाधिका—प्राणेभ्योऽप्यतिशयिता, अत एव प्रियतमा किं वीक्षिता?—दृष्टा? (झङ्कारं—मधुरध्वनिम्, अनुभूय—स्वीकारार्थकतया

अथ शङ्का,—

परक्रौर्य्यात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम्।
वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकाऽऽस्यशोषकृत्॥१८१॥ (व)

यथा मम,—

"प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपाऽन्ते
जाताशङ्का रचयति चिरं चन्दनालेपनानि।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
वामाक्षीयं चकितमभितश्चक्षुषी विक्षिपन्ती॥" (श)

---

निविष्ट, आनन्दन्) हे सखि ! किं ब्रूषे ? ओम् इति ?—[ओम् इति स्वीकारसूचकमव्ययम्] तत्—तर्हि, आशु—शीघ्रं, मे—मह्यं, कथय—ब्रूहि, इयं किं किं व्यवस्यति—कर्तुमीहते ? कुतः,—कुत्र, अस्ति ? कीदृशो च ? वर्तते इति शेषः इति। [अत्र वामेन "अमरः प्रत्युत्तरायनः" इति विशेषणनिर्देशात्त्वाचमत्वं बोध्यम्]। वसन्ततिलकं वृत्तम्। [यथा वा—"हंस ! प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता। विभावितैकदेशेन देयं यदभियुज्यते]॥" इति। परिपुष्टिस्तु विक्रमोर्वश्यादौ।

(व) शङ्कामाह, परेति।—परस्य क्रौर्य्यं—क्रूरता, तथा आत्मनः दोषः, तद्दैवमादिभिः अनर्थस्य—अनिष्टस्य, आपद इति यावत्, तर्कणं—सम्भावना, शङ्का। (एषा हि भीत्याद्युद्भावनेन प्रकम्पाद्युत्पादिका, न हि पूर्वदृष्टस्मृतिः इति विशेषः) तत्र वैवर्ण्यं, कम्पः, वैस्वर्य्यं—स्वरभङ्गः, पार्श्वालोकः,—पार्श्वावलोकनम्, आस्यस्य—मुखस्य, शोषश्च भवति इति भावः।

(श) उदाहरति, प्राणेशेनेति।—इयं—दृश्यमाना, वामाक्षी—कृशाक्षी, प्राणेशेन—प्राणनाथेन, कान्तेनेति यावत्, प्रहितनखरेषु—दत्तनखविलेखनेषु, अङ्गकेषु जाताशङ्का—लज्जाद्युपहासादेः सञ्जातशङ्का सती, क्षपाऽन्ते—रात्र्यवसाने, उत्सवेऽपि इति भावः, अभितः,—सर्वतः, चकितं—भीतं यथा तथा, असकृत्—पुनः पुनः, चक्षुषी विक्षिपन्ती सती, चिरं चन्दनालेपनानि, नखचिह्नगोपनार्थानीति भावः, रचयति, तथा दत्तदन्तावघाते—दंशिते इत्यर्थः, अधरे लाक्षां धत्ते—धारयति, अर्पयति इत्यर्थः। अयं भावः,—यदि सख्यो अन्या वा काऽपि ममैतदङ्गकेषु एतत् द्रक्ष्यन्ति, तदा किमहं तथा प्रत्युत्तरयिष्यामि ? परं भविष्यामि तदानीं वाचां वर्जिता

अथ स्मृति:,—

**सदृशज्ञानचिन्ताऽऽद्यैर्भ्रूसमुन्नयनादिकृत् ।**
**स्मृति: पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥१६४॥ (ष)**

यथा मम,—

"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृश: स्मेरं स्मेरं स्मरामि तदाननम् ॥" (स)

---

परिचितरहस्या, इति रह: स्थितैव बहिर्गमनात् प्राक् तद्दीपनार्थमेवं कृतवतीति । अत्र सखीनयनगोपन एव विश्रान्तिरिति अवहित्थाया एव प्राधान्यम् । मन्दाक्रान्ता वृत्तम् ।

(ष) स्मृतिमाह, सदृशेति ।—सदृशज्ञानेन चिन्ता—भावनाख्य: संस्कार:, तदाद्येन [ आद्यपदेन समभिव्याहारादेर्ग्रहणम् ] पूर्वम् अनुभूत: अर्थ:,—रूपरसादिरूप: यस्य तादृशस्य, विषयस्य—वस्तुन:, ज्ञानं स्मृति: उच्यते । [ अत्र सदृशज्ञानादे: संस्कारोद्बोधनद्वारा, संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वम् इति बोध्यम् ] तत्र भ्रुवो: समुन्नयनादिकं भवति ।

(स) उदाहरति, मयीति ।—प्रोषितस्य कस्यचित् नायकस्य सखायं प्रत्युक्तिरियम् । सकपटं यथा स्यात् तथा क्वापि—कुत्रापि, तावत् अज्ञातानुरागे कामिनीजने इति भाव:, (अनिर्दिष्टपदार्थे वा) किञ्चित्—ईषत्, प्रणीतविलोचने—निक्षिप्तनयने, मयि, अत्र किमपि—कामिनीजनव्यापारावलोकनायानुरागसूचकं सप्रेमदृष्टिपातरूपं वस्तु इत्यर्थ:, तिर्यक् विजृम्भिता तारका यत्र तादृशं, नयनं प्राप्ते—मम दृष्टिपथं गते सति, स्मितं—हासम्, उपगता—सम्प्राप्ताम्, आलीं—तत्र स्थिताम् अत एव तत्सर्वं चेष्टितं पश्यन्तीं सखीं, दृष्ट्वा सलज्जं यथा स्यात्तथा अवाञ्चितम्—अवनमितं, कुवलयदृश:,—नीलोत्पलाक्ष्या:, स्मेरं स्मेरं—पुन: पुन: स्मितवत्, तत् आननं स्मरामि । अत्र कामपि परकीयां कामिनीं कामयमानं कञ्चन नायकं विभाव्य, नायिकाया: स्मितगर्भितमुखनिरीक्षणेन नायककर्तृकं नायिकानुस्मरणम् । हरिणी वृत्तं,—"नसमरसला ग: षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ।

अथ मतिः,—

**नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः।**
**स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः ॥१९५॥ (ङ)**

यथा,—

"असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥" (च)

अथ व्याधिः,—

**व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ॥१९६॥ (छ)**

---

(ङ) मतिमाह, नीतीति।—नीतिमार्गः,—नीतिशास्त्रं, तस्य अनुसृत्यादेः,—अनुसरणादेः हेतोः, अवगमादेः हेतोरिति यावत्, [आदिपदेन अनुमानादेर्ग्रहणम्] अर्थानां—कार्य्याणां, निर्द्धारणं—निर्णयः, मतिः, निगमागमसमालोचनोत्पन्नः तात्पर्य्यनिर्णयः मतिः इति निष्कर्षः। स्मेरता, धृतिः, सन्तोषः, बहुमानश्च तद्भवाः,—स्मेरताऽऽदयः तदुत्पन्ना इत्यर्थः। [अन्यत्राप्युक्तम्;—"शास्त्रादिविचारजन्मार्थनिर्द्धारणं मतिः, तत्र निःसन्देहार्थानुष्ठानसंशयोच्छेदादयोऽनुभावा भवन्ति" इति]।

(च) उदाहरति, असंशयमिति।—शकुन्तलामवलोक्य दुष्मन्तस्यानुमानमिदम्। इयं, शकुन्तलेति शेषः, असंशयं—निश्चितं, क्षत्रस्य—क्षत्रियजातेः, परिग्रहे—पत्नीरूपेण स्वीकारे, क्षमा—योग्या, क्षत्रियविवाहोचितेति यावत्, यत्—यस्मात्, आर्य्यं—साधु, निर्दोषमिति यावत्, मे—मम, मनः अस्यां—शकुन्तलायाम्, अभिलाषि—अनुरक्तम्; तदेव समर्थयते, सतामिति।—हि—यतः, सन्देहपदेषु—सन्दिग्धेषु, वस्तुषु—विषयेषु, सतां—साधूनां, सदाऽप्यनाचरितपापकर्मणामित्यर्थः, अन्तःकरणप्रवृत्तयः,—आन्तराणि तत्त्वानि, सङ्कल्पादयः इति यावत्, प्रमाणं—निश्चयबीजम्; साधुमनसा यत् काम्यते, तदवश्यमेव कामयितव्यं, नात्र वैपरीत्यसम्भव इति भावः। अत्र शकुन्तलायाः स्वपरिग्रहोचितत्वनिर्द्धारणम्। शेषमखिलं स्पष्टम्।

(छ) व्याधिमाह, व्याधिरिति।—वाताद्यैः,—वायुपित्तकफादिप्रकोपैरित्यर्थः, जात इति शेषः, ज्वरादिः व्याधिः; रोगविरहाद्युत्पन्नः चित्तोद्भवः सन्तापः व्याधिः इति सारः। अत्र विभावाः विरहविरहवातपित्तादिप्रकोपाः, अनुभावाः शरीरवैकल्य-श्वासोद्गारादयः। [एतदाचक्षुः प्राचीनतन्त्राः,—"एकैकशो द्वन्द्वशो वा समस्तैर्वा

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः। स्पष्टमुदाहरणम्।

अथ त्रासः,—

निर्घातविद्युदुल्काद्यैस्त्रासः कम्पाऽऽदिकारकः॥१८७॥ (ग)

यथा,—

"परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम्॥" (घ)

---

प्रकीर्तितः। वातपित्तकफानां स्युः व्याधयो ये ज्वरादयः॥ इह तत्प्रभवो भावी व्याधिरित्यभिधीयते॥" इति] तत्र भूमीच्छा—भूमौ शयनेच्छा, उत्कम्पनादिकञ्च भवति। उदाहरणं यथा,—"प्रियजनपरिवादात् वेपमानां कृशाङ्गीं, विकलवचनवर्णां खेदसंसिक्तगात्रीम्। विपुलपुलकरेखामाकलय्य ज्वरार्तां, कुमतिरमितचिन्तासागरे निममज्ज॥" इति।

(ग) त्रासमाह, निर्घातेति।—निर्घातः,—"यदाऽन्तरीक्षे बलवान् मारुतो मरुताऽऽहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥" इत्येवंरूपः शब्दविशेषः, विद्युत्, तथा उल्का—आकाशगामी ज्योतिरग्निमयः पदार्थविशेषः, उक्तञ्च,—"महच्छिखा च सूक्ष्मा या रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता॥" इत्युक्तलक्षणा, एवमादिभिः हेतुभिः कम्पाऽऽदिकारकः त्रासः, भवति इति शेषः।

(घ) उदाहरति, परिस्फुरदिति।—भारवौ जलक्रीडावर्णनमिदम्। सुराङ्गनाः,—अप्सरसः, परिस्फुरद्भिः,—परितः सञ्चरद्भिः, मीनैः,—मत्स्यैः, विघट्टिताः,—आहताः, ताडिता इत्यर्थः, ऊरवः,—सक्थिनी यासां ताः, अत एव त्रासेन विलोलाः,—चञ्चलाः, दृष्टयः यासां तथाभूताः, तथा कम्पिताः पाणिपल्लवाः यासां तथोक्ताः सत्यः, सखीजनस्यापि, किं पुनर्विलासिनामित्यपिशब्दार्थः, विलोकनीयतां—दर्शनीयताम्, उपाययुः,—प्रापुः। वंशस्थविलं वृत्तम्। [यथा वा—"समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः। त्रसत्तुषाराद्रिसुतासससम्भ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम्॥" इति शिशुपालवधे १ स० ५० श्लोकः]।

अथ व्रीडा,—

धार्ष्ट्याभावो व्रीडा वदनानमनादिकृद्दुराचारात्। १९८ (ङ)

यथा,—"मयि सकपटम्" इत्यादि।

अथ हर्षः,—

हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥१९९॥ (च)

यथा,—

"समीक्ष्य पुत्रस्य चिरात् पिता मुखं
निधानकुम्भस्य यथैव दुर्गतः।
मुदा शरीरे प्रबभूव नात्मनः
पयोधिरिन्दूदयमूर्च्छितो यथा ॥" (छ)

---

(ङ) व्रीडामाह, धार्ष्ट्याभाव इति।—धार्ष्ट्यस्य—निर्लज्जत्वस्य, अभावः,—राहित्यं, व्रीडा; सा चेत् दुराचारात् भवति, तदा वदनस्य—उपलक्षणात् मस्तकस्य, आनमनादिं करोतीति तथाभूता। नायिकानां नायकवक्त्रावलोकनादेः, पुरुषाणाञ्च प्रतिज्ञातनियमभङ्गापमानादेः समुद्भवः निस्तेजस्त्वाधोवदनत्वादिनिमित्तीभूतः मनोवृत्तिविशेषो व्रीडा। [केचित्तु एवमुदाजह्रुः, यथा हि,—"चेतोनिमीलनं व्रीडा व्यङ्ग्यरागमुखादिभिः" इति। उदाहरणं यथा वा,—"पटालग्ने पत्यौ नमयति मुखं जातविनया हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्। न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥" इति]।

(च) हर्षमाह, हर्ष इति।—इष्टस्य—प्रियस्य वस्तुनः, अवाप्तेः,—लाभात्, अश्रु—नेत्रजलं, गद्गदम्—अस्पष्टभाषणं, तदादिकरः मनसः,—चित्तस्य, प्रसादः,—प्रसन्नता, हर्षः।

(छ) उदाहरति, समीक्ष्येति।—दुर्गतः,—दरिद्रः, यथा एव निधानकुम्भस्य—रत्नगर्भस्य कलसस्य, दर्शनात् भवति इति शेषः, तथैव पिता—जनकः, चिरात् पुत्रस्य मुखं समीक्ष्य—निरीक्ष्य, इन्दूदयेन—चन्द्रोदयेन, मूर्च्छितः,—वृद्धिं गतः, पयोधिः यथा—समुद्र इव, [अविग्रहस्य समुद्रस्य संस्थितत्वं भवतीति अभिप्रायेणोपमा इयम्, अथवा,—यथा पयोनिधिरिन्दूदयेन तरङ्गी भवति, तथा पुत्रोत्पत्त्या हर्षतरङ्गी बभूव इति उपमा] मुदा—हर्षेण, आत्मनः,—स्वस्य, शरीरे—शरीरपेटिकायां,

